# पदचन्द्रिका

श्रीगणेशाय नमः

उमापुत्रं नमस्कृत्य याज्ञवल्क्यं गुरूंस्तथा
स्वरादीनां प्रबोधाय क्रियते पदचंद्रिका १
उच्चैरुदात्तो विज्ञेयोऽनुदात्तो नीच एव च
स्वरश्चोभयवान्स्वारः प्रवां स्वश्च निदर्शनं २
स्वरो ह्रस्वोऽप्युदात्तः स्यान्नीचः स्वरित एव च
दीर्घप्लुतोऽप्येवमेव ज्ञेयं सर्वत्र वैदिकैः ३
अष्टौ स्वरान् प्रवक्ष्यामि तेषामेव तु लक्षणं
जात्योऽभिनिहितः क्षैप्रः प्रश्लिष्टश्च तथापरः ४
तैरोव्यंजनसंज्ञश्च तथा तैरोविरामकः
पादवृत्तस्तथाताथाभाव्यश्चाष्टौस्वराः स्मृताः ५
व्यंजनैस्तु यवौभ्यां च परो यः स्वार एव च
अपूर्वो नीच पूर्वो वा जात्यः स्वारः स उच्यते ६
धान्यं मनुष्यां चम्बी च वीर्यं कन्या इवेति च
भाव्यं चोक्थ्यं पथ्ये वा पूर्व नीचः स्व उच्यते ७
एदोत्तोरुच्चयोर्यत्र नीचोकारः परो यदि

पूर्वरूपेऽभिनिहितोऽप्यदात्तस्य तु बाधकः ८
विसर्गोऽप्युपधा युक्तश्चौत्वमापद्यते यदा
अकारे च परे चैव वेदो असीति च स्थिते ९
एदोद्भ्यां च परोकारः पूर्वरूपं तु निश्चितं
आपद्यते तेष्वरसां वेदोसीति निदर्शनं १०
इउवर्णौ उदात्तौ च यवौ च प्राप्नुतस्तदा
अनुदात्ते परे चैव यवाभ्यां नीच एव च
स्वरितः क्षैप्रसंज्ञः स्याद्वाज्यर्वन् त्र्यंबकं तथा
देव्ये तु सूनृता चैव द्व्रन्नोन्वींद्रश्चेति दर्शनं ११
ह्रस्वेकारोऽप्युदात्तश्च नीचेकारः परस्तथा
एकीभावे तयोर्जाते स्वारः प्रश्लिष्टसंज्ञिकः १२
अभीन्धतां दिवी वापि स्रुची वा भीममेव च
एवं सर्वत्र विज्ञेयं वैदिकैस्तु विचक्षणैः १३
उदात्तपूर्वःस्वरितो व्यंजनेन समन्वितः
तैरोव्यंजनसंज्ञः स्यात्स्वानभ्याज यथा यया १४
इळेरंतेदिते चंद्रे ज्योते महिच विश्रुति
सरस्वति तवाग्ने च हव्ये काम्ये गवे हरिः १५
उदात्तावग्रहाद्यत्र परश्च स्वरितोऽस्ति चेत्
तैरोविरामं तं विद्यात् गोमत्प्रप्रेति गोपतौ १६
स्वरयोरंतरे यत्र विवृत्तिर्यदि दृश्यते

तस्याः परो यः स्वरितः पादवृत्त स उच्यते १७
दात्र एधि चता अस्य नवाऽ नुकऽउपेति च
क ऽ ईन्देवा ऽ असन्नेवंते ऽ अस्येति निदर्शनं १८
उदात्तादिरुदात्तांतो नीचोऽवग्रह एव च
ताथाभाव्यः सविज्ञेयः कंपं तत्र वदेद्ध्रुवं १९
तनूनपात्तनूनप्त्रे तनूनपातमेव च
अष्टौ स्वरा इमे प्रोक्ताः प्रातिशाख्यानुसारतः २०

इत्यष्टौ स्वरिताः

स्वरितोऽप्यनुदात्तेन त्वेकी भावे कृते तदा
स्वरितरक्तभवेत्तत्र ब्रह्मा सृज्यत दर्शनम् १
एकीभावोऽप्युदात्तेन स उदात्तो भवेद्ध्रुवं
मोरुत्वाशाभ्य एवैति ब्रह्मापश्चममेदिह २
उदात्तादनुदात्तं च त्वक्षरं स्वरितं भवेत्
इषे त्वा वायवस्तन्नः स्वाहेति च निदर्शनम् ३
उदात्तात्स्वरितात्पूर्वः स्वरितश्च निहन्यते
आघाये फलिनीर्याश्च भुवः स्वरिति दर्शनं ४
स्वरितादनुदात्तस्य प्रचितः स्यादपि ध्रुवं
वाजोनश्चाप्रनोयछव्युप्तकेशाय दर्शनम् ५
उदात्तात्स्वरितात्पूर्वं निहितप्रचयो न च
स्यान्नः सूनुस्तथा योषाः कल्याण्यश्चेति दर्शनं ६

नीचश्चेति पदान्नस्याप्रचितस्तु तथैव सः
अवग्रहात्परो यत्र चोदात्ते स्वरिते परे ७
पदे देवगणाः प्राजापत्यो विरुरुचुस्तथा
तरत्तभानेऽभिपित्वे च सेनान्ये च निदर्शनं ८
यदे कस्मिन् पदे जाते स्वारे चोदात्तमक्षरे
तमेकं वर्जयित्वात्तु शेषं निहितमक्षरं ९
वायवस्तूपरो ब्रह्माधातेंद्रा पूषणा हरिः
अस्मछब्दस्याचादेशा नो नौ मे माचयुष्मदः १०
आदेशा निहिताः स्युर्वै त्वावोवां ते तु निश्चितं
उचित्समस्मान्मर्या ईमरे स्वित्स्महवाचकं ११
घेत्येते चानुदात्ताः स्युर्निपाता यदिचेत्तर्हि
विवेशेति पदं नीचं विचारार्थकमस्तिचेत् १२
अंत्याक्षरं त्रिमात्रं स्यान्नपरस्य त्रिमात्रता
विचारार्थकमासीद्वे तयोश्चैव त्रिमात्रता १३
अंतोदात्तं तु पूर्वं स्यात् परं सर्वानुदात्ततां
लांजी३ञ्छांची३च प्रणवः सर्वोदात्ताभवन्ति च १४
अंत्याक्षरं त्रिमात्रं स्यात्सम्यग्ज्ञेयं तु वैदिकैः १५
बोधामेरोचनाकोहं पतेत्वं दिव एव च
मंहीय ईश ईशानमेतारः पार इत्यपि १६
एभ्यः परोऽस्य शब्दस्य त्वाद्युदात्तो भवेत्सदा

पातंधियेषितां प्रत्नां यज्ञस्योद्दच एव च १७
मध्वः पिबतलोकश्च होतः प्रदिश्यृतस्तथा
यजमानस्याजरासो हविषश्च परेषु च १८
अंतोदात्तो भवत्यस्यान्यत्र सर्वानुदात्तत्ता १९
नाभिरस्य षळस्येति गुहास्येति निदर्शनं
गृभो भुवोऽग्निशब्दाच्च यथासर्वानुदात्ततां २०
अग्निपूर्वं घृतेनेति वदेत्सर्वानुदात्ततां
एनश्चापापवाची च सर्वो नीचश्च जायते २१
पदपूर्वमपादादावनानार्थे च दृश्यते
संबोधनं प्राप्नोति तं ध्रुवं सर्वानुदात्ततां २२
कदारिष्येमपूर्वं च त्वाद्युदात्तो भवेद्ध्रुवं
मृगवाची कृष्णशब्दस्त्वाद्युदात्तो न संशयः २३
परिमाणे च मात्रा चत्वाद्युदात्तोऽपि दक्षिणा
निषद्य दशसद्भ्यश्च विश्वकर्मासदस्तथा २४
इंद्रस्य पातु चैतेषु दक्षिनाद्युदात्ततां
कर्णः स्वांगेमहः क्लीबे स्कंधो वीर्येऽपि चादिरुत् २५
भद्रं कर्णेभिः कर्णौ ते महस्थांधस्थ एव च
एताशब्दो वर्णवाची आद्युदात्तो न संशयः २६
रायोपोषे त्वाद्युदात्तस्त्वेराय इति दर्शनं
अन्तोदात्तश्च रायश्च पोषेण भागमीशिषे २७

आद्युदात्तस्त्रिधाशब्दः परयो हितबद्धयोः
सुकृतं चाद्युदात्तश्च भूतार्थस्य च वाचकः २८
पायुशब्दात्परोऽप्यंतो विशस्तु जायते
अस्त्यर्यमोर्वशीभ्यांतोदात्तस्त्वायुर्भवेद्ध्रुवं २९
उर्वश्यायुश्चार्यमायुरस्ति आयोरपि ध्रुवं
द्वंद्वस्सोमेंद्रपूर्वश्च त्वंतोदात्तो भवेद्ध्रुवं ३०
द्विरुदात्तापवादो यमेषु पूषाग्निवायुषु
यंत्रीराट् शब्दयोगे तु रोहितश्च तु केवलः
आद्युदात्तो भवेन्नित्यं वर्ण वाची तु निश्चितं ३१

इति स्वर प्रकरणम्

अथ आख्यातस्वरप्रकरणं

पदपूर्वमपादादौ वर्त्तमाने यदास्ति चेत्
अनानार्थकमाख्यात्तं वदेत्सर्वानुदात्तताम् १
सत्यं जिन्ववयं स्याम प्रणुदानस्तथाऽभज
गोपतौ स्याततािवष्णो वेदोऽसीति च दर्शनं २
आख्यातपूर्वमाख्यातं प्रकृत्या भवति ध्रुवं
आमंत्रिताद्युदात्तानित्प्रकृत्याख्यातमेव च ३
अग्नेनयतथा होतर्यजेति च निदर्शनं
एकातरादाद्युदात्तादामंत्रितपदादपि ४
प्रकृत्यास्यात्तदाख्यातं क्वचित्सर्वानुदात्ततां

आमंत्रितपदाभावे तदर्थोऽप्यवमासते ५
प्रकृत्याख्यातमेव स्यात् प्रजाभ्यस्त्वेत्यृचि स्थितं
यच्छब्दात्परमाख्यातं प्राप्नोति प्रकृतिस्वरं ६
स च सर्वविभक्त्यंतः प्रत्ययांतोऽपि गृह्यते
यस्य येनार्थसंबंधो दूरस्थस्यापि तस्य तत् ७
अर्थतो ह्यसमर्थानामानंतर्यमकारणं
अग्निं यमाहुर्मनवो यथा यं वायुरेजति ८
यदत्ति च तथा चान्ये यतोऽजातो अरोचथाः
हि शब्दात्परमाख्यातं प्रकृत्या स्यात्तु चोत्तरे ९
ह्यजनिष्ट तथाहिस्थेत्त्युशंति हि परे तथा
समुच्चये द्वयोः पूर्वं प्रकृत्या स्यात्ततः परं १०
निहन्यते द्वितीयं तु शर्मचस्थो निदर्शनं
समनसः परं चैव प्रकृत्या तु करद्भवेत् ११
नेदित्यस्मान्निपाताच्च प्रकृत्याख्यातमेवच
समुच्चये च कारो वा द्रष्टव्यं वा विचारणे १२
विनियोगेह शब्दस्तु एव शब्दोऽवधारणे
च वा हैव पदानां च यद्यनुच्चारणे सति १३
तेषां कथं चिदर्थोऽपि यदि तत्रावगम्यते
तत्राख्यातं प्रकृत्या तु वेदभाष्ये त्विदंस्थितं १४
मरुतो वंदते गीश्च ज्योतिर्यच्छंति दर्शनं

शिवापयस्वती चैव सु षदा च मधुमतीः १५
यत्तेनाधृष्टमोजस्वान् भ्राजस्वाञ्छुष्मिणी तथा
भ्राजस्वान् भद्रवाच्याय वेद्यो मेध्यो यमस्त्रितः १६
स्वसादित्यश्च सोमेनेत्येतेषु च परेषु च
धनदारत्नधाभ्यां चत्वाद्युदात्तो भवेदसिः १७
एकोनविंशतिश्चासिराद्युदात्तो न संशयः
विंशतेरुपसर्गाणां उच्चा एकाक्षरं नव १८
आद्युदात्तो दशैतेषामंतोदात्तस्त्वभीत्य यं
उपसर्गोऽनुदात्तः स्यादुपसर्गे परे वृत्ति १९
संप्रयातं तथा संप्रच्यवध्वं च निदर्शनं
आख्याते च कृदंते च उदात्ते च परे स्थिते २०
उपसर्गो नुदात्तस्यात्संभरं स्यपिवाति च
आम्रेडिते चोत्तरं स्यात्सर्वो निचरत्तु निश्चितं २१
उपोपेत्संसमिच्चैव प्रप्रायमितिदर्शनं

इति आख्यातोपसर्गप्रकरणं

चछयोः परयोः शत्वं विसर्गस्य तु जायते
वाजश्च प्रसवश्चेति पंक्तिश्छंदश्चप्यदर्शनं १
तथयोः परयोः सत्वं विसर्गस्य तु जायते
अंतस्ते च नमस्ते च देवास्ता च निदर्शनं २
शषसेषु परेष्वेव कखयोः पफयोरपि

विसर्गस्तु प्रकृत्या स्यात् पक्षेऽर्द्धः कादिषु ध्रुवं ३
मित्रः शं वरुणः शन्नोऽप्यदितिः षोळशेति च
देवो वः सविता वः स्वः पक्षे स्युः शषसाः क्रमात् ४
नः कल्पं तां तथैवापि ततः स्वनेमनिश्चितं
याः फलिनीश्चयः पोता पक्षेत्वर्द्ध विसर्जनः ५
स इत्यस्य विसर्गोऽपि व्यंजने च परे स्थिते
लुप्यते सपितुश्चैव सनः सजायतेऽपिच ६
सकारात्तथयोरेव विसर्गो लुप्यते ध्रुवं
तद्विष्णुस्तवतेंधस्थो वायवस्थेति दर्शनं ७
पीवं शब्दा द्विसर्गोऽपि तथोपवसने परे
स इत्यस्य विसर्गोऽपि लुप्यते त्वोषधीमयोः ८
स्य एषयोस्तु लोपः स्याद्व्यंजने च परे स्थिते
स्यराथ्यस्य वाजी च त्वेषते च निदर्शनं ९
कंठ्य पूर्वविसर्गस्य सत्वं भाव्युत्तरस्य च
विसर्गस्य च षत्वं स्यात् अधिकाराप्यतः परं १०
इळाया वरिवश्चेळोऽप्याविर्निर्वसतिस्तथा
एतत्षट् पदसंबंधी सत्वं षत्वमनुक्रमात् ११
दिवोककुत्पृथिव्योश्च रायःसहस एव च
एतयोश्च विसर्गस्य सत्वं स्यात्पोषपुत्रयोः १२
दिवस्पुत्राय सूर्याय दिवस्पृष्ठे व्यचस्वतीं

दिवस्पृष्ठन्दिवस्पर्जन्यादपीति निदर्शनं १३
दिवः पृथिव्या पर्योजश्चाग्निर्मूर्द्धा दिवः ककुत्
रायस्पोषेण संश्चैव सहसस्पुत्र एव च १४
तमसश्च विसर्गश्च परस्तान्न पदे परे
तमसस्यारमस्यापि चोद्वयत्तमसस्परि १५
रिषःस्पृशस्तु रजसो धनः पातौ परे स्थिते
पाधातोर्ग्रहणं चात्र रिषस्पातु निदर्शनं १६
तपसः पृथिवी शब्दे सत्वमप्यध्वनस्कुरौ
दिवो विभाति तपसः पृथिव्यामध्वनस्कुरु १७
विसर्गस्य सषौ स्यातां समाने च पदे सति
भूयस्करश्च चक्षष्पा पथस्पथश्च दर्शनं १८
परुषात्तु विसर्गश्च सत्वमापद्यते न च
परे परुषि शब्दे च परुषः परुषस्परि १९
परिशब्दे वसानस्थे कविः करत्कृधिष्वपि
परेषु च विसर्गस्य सत्वं षत्वं त्वनुक्रमात् २०
ॐ षधयस्परीत्येव परुषस्परुषस्परि
नोंवस्यसस्करच्चैव पुनस्कृधि वसुष्कविः २१
कृषेः सत्वं कृधावेव कृषीस्कृधिसुनिश्चितं
सदोद्यौर्नम एतेषां कृतपितृपथेषु च २२
विसर्गस्य सकारश्च षकारश्च सदस्कृतम्

तथैव द्यौष्पिता चैव नमस्पथ इति ध्रुवं २३
षष्ट्यंतात्पतिशब्दे च विसर्गः सत्वमाप्नुयात्
वाचस्पतिं विश्वकर्मा पूषणं ब्रह्मणस्पतिं २४
भाविभ्यः सस्य षत्वं स्यात् समाने च पदे स्थिते
सीषयामसुषा वैव गोष्ठानं परमेष्ठ्यपि २५
भाविभ्यश्च विसर्गेण व्यवधानेऽपिषो भवेत्
समाने च पदे चैव दुःष्वप्न्यं सुव एव हि २६
अनुस्वाराङ्गाविपूर्वात् सस्य षत्वं विधीयते
तपूँष्यग्ने हवींष्या च ज्ञेयमन्यत्र वैदिकैः २७
स कारस्य च षत्वं स्यान्नेः परस्य च सीदतेः
नेः परस्य ससादस्य निषसादनिषीदतः २८
मोशब्दाच्च सु शब्दस्य षत्वं मोषूण एव च
उकारादव्ययात्सुश्च षत्वं चोषूण एव च २९
अभेः परस्य षत्वं स्यात् सुशब्दस्य त्वभीषुणः
परेश्च सिंचतेः षत्वं परिषिंचत्यभेरपि ३०
सिंचतेरेव षत्वं स्यादभिषिंचाभिजायते
व्यवधाने त्वकारेणाभ्यषिंचन्याभिरेव च ३१
उपसर्गात्सस्य षत्वं ते विष्यामि च विष्यतु
अतः परंसस्य षत्वं परयोस्तथयोष्टठौ ३२
हि शब्दात्सस्य षत्वं स्यात् मथयोः परयोः सतोः

थस्य ठत्त्वं तु हिष्माते त्वापो हिष्ठामयो भुवः ३३
द्यवि शब्दात्सस्य षत्वं थकारे ठो द्यवि ष्ठच
निसः सस्य च षत्वं स्यात् परस्य तस्य टस्तथा ३४
ततक्षौ निष्टतक्षुश्च निसश्चस्त्यायतेस्तथा
सधिरंशुश्चादितिश्च माकिर्वंदारुरेवच ३५
एतेषां तु विसर्गस्य षत्वं टत्वं परस्य तु
सधिष्टवतथाशुष्टेत्त्वादिनिष्ट्वा तथैव च ३६
माकिष्टे व्यथिरादधर्षी द्वंदारुष्टे सुनिश्चितं
वायोरग्नेर्विसर्गस्य षत्वमेकाक्षरे चटः ३७
वायुष्टेऽधिपतिश्चैव त्वग्निष्टेऽधिपतिस्तथा
सपरैकाक्षरे षत्वं विसर्गस्य परस्य टः ३८
बृहस्पतिष्ट्वासुम्ने च पतिष्ट्वासादयत्वपि
पायुभिर्मातृभिश्चैव वरूत्रीरर्चिभिस्तथा ३९
एतेषां तु विसर्गस्य षत्वं स्यात्तस्य टौ भवेत्
वायुभिष्ट्वं मातृभिष्ट्वं वरूत्रीष्ट्वार्चिभिष्ट्वसु ४०
पृतनायाः सहेः सस्य पृतना षात्य एव च

इति विसर्गप्रकरणम्

अथ सत्वषत्वनिषेध प्रकरणं अतिस्थूलं
सुसस्याश्च बृहस्पति सुतस्य हि
क्रतुस्थलां जिसक्थोऽनुसंतनोतु सुसंदृशं १

सुसमिद्धायाभिसत्वाभिसंविशंतु च गोसनिः
मुसले हरिणीः सीसासीसेन च दिविस्पृशं २
सीसं दिविस्पृशा पत्नी संयाजान्पशुसन्यपि
प्रतिसदृङ् च हीसीश्चः प्रतिसदृक्षासस्तथैव ३
पृथिविचर्षणीयासि शकुन्युपरि वै दिवि
एभ्यः परस्य सस्यैव षत्वं न स्यात्तनिश्चयः ४
प्रकृत्यो परिसद्भ्यश्च पृथिवी सदमेव च
यासि सीष्ठा दिविसदंत्वेव च चर्षणीसहां ५
तया शकुनि सादेन पाठोऽन्योऽशुद्ध एव हि
तिसृभिस्तितित्तिरिस्ते च तिस्र ऋक्सामयोरपि ६
अंतः पाश्वर्यं वाजपतिर्वास एदिधिषुस्तथा
अंतः पर्शव्येनैतेषां विसर्गस्य सषौनहि ७
वासः पल्पूलिमेकं च परिवाजपतिः कविः
प्राप्तस्य तु निषेधः स्यात् तथैवैदिधिषुः पतिः ८
अहः शब्दो विसर्गोऽपि रेफमापद्यते पतौ
स्वल्पोदाहरणान्यत्र प्युक्ता विग्रंथगौरवात्
प्रातिशाख्ये च द्रष्टव्यं संदेहो यत्र जायते ९

इति सत्वषत्वनिषेधप्रकरणं

लोपागमप्रकरणम् उच्यंते त्वित ऊर्ध्वं तु
लोपागमौ तथैव च

विकारश्चाथवर्णस्य मूर्धन्यश्च परस्य च १
स्वर्धूरोश्च विसर्गश्च रेफमापद्यते यदा
सांसहोः परयोश्चैव मूर्द्धन्यं तु परस्य च २
स्वर्षामप्पां तु काण्वस्य धूर्वाहाविति जायते
माध्यंदिनीये धूर्षाहौ तदभिप्रायकं त्विदं ३
दुरित्यस्यविसर्गस्याप्यूकारो दे परे स्थिते
परस्यैव तु मूर्द्धन्यं दूळभोरथ एव च ४
पुरो विसर्जनश्चोत्वं दकारे च परे स्थिते
परस्यैव तु मूर्द्धन्यं पुरोडाशैर्हवींषि च ५
अनसः सस्य डत्वं च वाह्वशब्दे परे स्थिते
अनड्वानप्यनड्वाहमन्वारमामहे तथा ६
आघाशब्दात्तकारस्य टो दार्वाघाट एव च
वनशब्दः सकारेण पतावेव वनस्पतिः ७
वनः शब्दः सदे शब्दे रेफेण व्यवधीयते
वेटपरे च सदे शब्दे न स्याल्लक्ष्यं वनर्षदः ८
ऋतावरौसकारेण व्यवधानं पतौ परे
यथा संख्येनैव ऋतस्पते वरस्य एव च ९
तद्बृहतो स्तकारस्य लोपः स्यात्तु करे पतौ
व्यवधानं सकारेण तस्करोश्च बृहस्पतिः १०
परिशब्दः कृते शब्दे षत्वे न व्यवधीयते

सुशब्दश्चैव चंद्रे च शत्वे न व्यवधीयते ११
परिष्कृतास्तु पूर्वस्य त्वुभेसुश्चंद्रसर्पिषः
दुधुक्षन्पदसंबंधी धकारोदत्वमाप्नुयात् १२

इति लोपागमप्रकरणम्

अथ णत्वप्रकरणं

ऋषरेभ्यः समाने च पदेनस्य तु णो भवेत्
पितृणां च नृणा पूष्णः पूर्णं चेति निदर्शनं १
कवर्गेण पवर्गेण स्वरेण यवहैरपि
एतैर्व्यस्तैः समस्तैश्च व्यवधानोऽपि जायते २
नृमणाश्च पवित्रेण तथा पुरीष वाहनः
कर्मणे वरुणाभ्यां च प्रवाहणश्च दर्शनं ३
इंद्र एणं निषण्णाय रक्षाणः परिणीयते
षुणासत्याषुणत्वस्वर्णास्थूरिणश्च समिंद्रणः ४
प्रण आयूंष्युरुष्याणः परिणोरथवाहणं
प्रोपसर्गाद्धिनोमेश्च णत्वं च प्रहिणोमि वा ५
प्रोपसर्गान्नुदात्तेश्च नेनेर्नस्य च णो भवेत्
प्रणयप्रणयन्तु प्रणुदानः प्रणुदात्यपि ६
अभावेऽपि निमित्तस्य एतेषामेव जायते
नैवान्यत्रेति नियमात् पूषानोकिन्र्नुनप्रनः ७
परिणः श्रीमणाश्चेति णत्वं काण्यमतेऽपि च

पदांतीयो नकारश्च प्रकृत्या जायते पितॄन् ८
वाध्रश्नसो बभ्रुनी च प्रकृत्या भवति ध्रुवं
इंद्राग्नी चित्रभानो वार्त्रघ्नदुःष्वप्न्यमेव च ९
ध्रुवयोनिर्ब्रह्मवनिरायस्पोषवनिस्तथा
पुरोनुवाक्याश्चर्मम्नं अवक्रंदेन तालु वा १०

इति णत्वप्रकरणम्

अथ दीर्घप्रकरणं

अर्चातिष्वाद्युदात्तं च दीर्घौस्यातां तु निश्चितं
संहितायां नीहारेण नीवाररुवनवग्रहे १
योजानुधारयामा च यजानोवा न आतुनः
गायतानरमोषूणोऽप्युरुष्याणस्तथैव च २
रक्षणाश्च सचस्वानो यछानो जयतानरः
मत्सधानः पिपृतानिर्नकारादौपदे परे ३
यजानश्च भवानश्च नकारादौ पदे परे
योजेत्यादि च शब्दानां दीर्घता स्यात्तु निश्चितं ४
स चावरूथवाज्यस्य पायुष्वेषु पदेषु च
भव शब्दस्तु दीर्घः स्यां नान्यत्र भवति ध्रुवम् ५
उकारोपृक्तदीर्घः स्यात्सुशब्दे च परे स्थिते
ऊषुणोप्यूषुणासत्या न चान्यत्रोदुतिष्व च ६
उदारिथसलक्ष्मादय शोचपनयसादय

भवताद्याश्च इत्येते यकारे चापि दीर्घतां ७
भवत शृणुते तावतिष्वरक्षपिबा अपि
मकारे च परे षण्णां पदानां दीर्घता भवेत् ८
हाकारे च चकारे च त्वघशब्दस्यदीर्घता
वृणीमहे च देवाश्वा भवता च परेषु च ९
वाजे आद्याढुवेमापि अवो अद्या वृणीमहे
अद्या च मृळयाप्येवं त्वद्या देवानहोतरि १०
ते पूष्णो जहिमश्चेति पदेष्वेतेषु दीर्घतां
अत्र शब्दस्य चात्रातेत्रापूष्णो त्रा जहीति च ११
नरः सप्तऋृषीन्नास्त आहुर्नियुद्भिरेव च
पदेष्वेतेषु दीर्घत्वं यत्र शब्दस्य जायते १२
एवाथ चकृमा छा च व्यंजने च परे स्थिते
एतेषां दीर्घतामेव पादादिर्गृह्यतेऽपि च १३
दीर्घता विद्मशब्दस्यासौत्रामण्या तु व्यंजने
अधशब्दस्य दीर्घत्वं अधाह्यग्ने अधायथा
अधशब्दस्य दीर्घत्वं नस्याद्यत् ग्नास्मवायुषु १४
पिबा सुतस्य हिष्माते वर्द्धया रयिमेव च
श्रुधी हवं च रासोमं श्रोता ग्रावाण एव च १५
पिबा सोमं च युक्ष्वा हि नूरणे स्थामयो भुवः
पाथादिवो वने मातेरुहामास्वस्तयेऽपिच १६

विवृता बधमवता हवेषु शृणुधा गिरः
आच्याजानुतथा क्षामा रेरिहत्वं तरामृधः १७
आत्ताहवींषि बोधामे चापो जनयथा च नः
शिक्षा सखिभ्य ऋध्यामा ते तथा ररिमाहि च १८
प्रब्रवामाघृतस्यापि त्वं तरं गमयातमः
येनासमतृचा जगंथा परस्याः सिंचता सुतं १९
रक्षातोकं यजादेवान् तथादीया रथेन च
विदद्यदी च सरमा येनापावक चक्षसा २०
प्रचिकित्सा ग इष्टौ च चक्राजरसमेव च
प्रेताजयतातरता सखायो भूषणस्तथा २१
सुष्टरीमा जुषाणश्च वर्द्धया त्वं तथैव च
क्षामाभिंदत एवापि सृजारराण एव च २१
भरा चिकित्वात्स्वदयासुजिह्वप्रावता वचः
समंजिंचारया चैवसेदिमावयमेव च २२
रक्षामाकिर्धारयावसूनिश्चरक्षाचनोपि च
एतेषां संहितायां तु दीर्घता स्यात्त्पदेन च २३
वीरो विश्वे वाजयंतो वृत्रं विख्येषमेव च
अभिपदस्य दीर्घत्वं नैतेषु च परेषु च २४
अवशब्दस्तु दीर्घो न नयामि च परे स्थिते
अद्यशब्दस्तु दीर्घो न नयामि च परे स्थिते

अद्य शब्दस्तु दीर्घो न होतर्ये वपरे स्थिते २५

इति दीर्घप्रकरणं

अथानुस्वारागमप्रकरणं

नकारस्य तु शत्वं स्याच्चछयोः परयोरपि
तस्मात्पूर्वोऽप्यनुस्वारोऽप्यागमोऽपि विधीयते १
प्रुषीद्गश्चक्षुषे चैव त्वहद्गश्च निदर्शनं
न कारस्यृतुमत्वं स्यात्तथयोः परयोस्तथा २
अनुस्वारः सकारात्तु पूर्वमेव तु जायते
अन्याद्गरत्तेपशूद्गस्तात्रत्प्रद्गस्त्वं निदर्शनं ३
नृछब्दस्य न कारस्य विसर्गः पे परे स्थिते
अनुस्वारो विसर्गाच्च पूर्णसेवेतु जायते ४
वनस्पतीन् क्रतून् शत्रून् परिधींश्च स्वरे परे
नकारस्य तु रेफः स्याद्राहनुस्वार एव च ५
अनुस्वारो मकारस्य रेफोष्मसु परेषु च
अपाद्गरसनित्यवत्त्वाद्गशश्वंत एव च ६
त्वाद्गसवितुस्त्वाद्गहि त्वद्गहीति निदर्शनं
पदमध्ये नकारस्य मकारस्य तथैव च ७
जायते चत्वनुस्वारो रेफ भिन्नेषु चोष्मसु
तस्मात्पूर्वोप्यनुस्वारो सद्गस्कृति निदर्शनं ८
अद्गशुनात पूद्गषी जदिपवाद्ग स एव च

पदमध्ये मकारस्य सत्वं स्यात्केत्वनुष्मसु ९
न कारो न विरंचत मणि प्रत्यये परे
महित्तग्नथा मध्वन्तमानां वृत्रहन्तमं १०
निर्जगचान्नतमपिविकारन्नैव सर्वदा
पदमध्ये मकारस्यानुस्वारो रेफ एव च ११
शत्रून् ताळिह च धीमंते चिकित्वान्त्वं दूत एव च
समो मकारः प्रकृत्या राड्राज्योः परयोः सतोः १२
सं म्रराट् तथा च सांम्राज्ये नाभीति च निदर्शनं १३

इति अनुस्वारागमप्रकरणम्

अथ नकारविकाराभावप्रकरणम्

अथाकारो पधस्यैव न स्य यत्त्वुं तु जायते
य कारस्य तु लोपः स्यादुघधारं जनं भवेत् १
महा इंद्रो नृनच्चैव त्वन्याऽउपनिदर्शनं
अश्वस्तूपरअध्या येन कारो न विकारतां २
स्वरे च परतश्चैव लबानालभतेऽपि च
शिशुमाराना लभतेऽप्येवं ज्ञेयं वैदिकैः
न कारस्य विकारो न वैस्फनिति संक्रमे
स्वरे च परतश्चैव वैस्फवानवनिश्चितं ३
प्रातिशाख्ये प्रसिद्धानि पदानि च बहूनिव
ग्रंथगौरवान्ने ह लिख्यते तु मयाधुना ४

अग्निष्ठात्तान्ट तु मतोपयस्वा न त एव च
देवानस्त्रेधता चैव युष्मान् ग्रे च दर्शनं ५
मित्रान्मनुष्यान्तान्लोका नित्येषान्नस्य यो न च
उदिशब्दे परे चैव मित्रानुदि निदर्शनम् ६
भक्षान् शब्दस्य योनस्य त्वाप्नोतौ श्रपयानि तौ
गृहानुपगृहानैमि वर्चस्वाहमेव च ७
मनुष्यानंतरिक्षं च नभस्वानार्द्रदान्विति
स्वर्गानिपामनड्वानाशुःशत्रूतनुयं तथा ८
एतानष्टौ नग्नेविद्वा नग्न एव च
एतावानस्य वायव्यानारण्याश्च तथैव च ९
एवं न स्मानरिष्टेभिः सपत्नानिंद्रमेवच
विरूपाना यातुधाना नस्थादेवः प्रतीति च १०
तथा नड्वानधोरामो विकारो नस्य नै व हि
एतेषां तु पदानां च स्वरे च परतः स्थिते ११

इति नकारविकाराभावप्रकरणम्

अथ हल्संधिः

पदांते च भकारस्य य बलाश्चानुनासिकाः
यवलेषु च सर्प्पैर्मिसंवांतँ श्लोकमेव च
स्पर्शे परे मकारस्य परस्पर्शस्य पंचमः
यामिषुङ्गिरिशंतैव व्रतङ्कृणुत एव च २

एवं व्रतञ्चरिष्यामि काण्डात्कांडात्तथैव च
इदम्पितृभ्यस्तन्ते वित्त्वमाम्फेनेघंत दर्शनं ३
तकारस्कृलकारे च लत्वयापद्यते ध्रुवं
न कारांतात्पदाच्चैव लकारे च परस्थिते
प्राप्तात्येवनुकारश्च लकारमनुनासिकं ४
त्रीँल्लोकाश्च तथाचास्मिँलोके चेति निदर्शनं
न कारांश्च ङ्कारस्यैश्च तकाभ्यां व्यवधीयते
सादौ पदो त्रीन्त्समुद्रा अत्यङ्कतामश्च वा भवेत् ५
स्वरश्च कारे च परे चेनापि व्यवधीयते
संहितायां पदेष्वेवमाच्छंदोच्छावदामसि ६
सहयस्यातिहायेभ्यश्छकारे च परे स्थिते
व्यवधानं चकारे एति पिनस्यु सदैवहि ७
यस्य छाया मृतं यच्च सह छंदस एव च ८
विराजत्य निरास्त्वं त्वां मवीवृध्रन् परिद्विषः ९
विश्वाआशाजयश्चैव परिष्ठा ओषधीरसि --
आभाहितेसुक्षितयोप्येतेषु च परेषु च
चाप्यूष्मां तं उक्ते षु च पदेषु च १०
परः संभवमंथी च पृथिवीं शुक्र एव च
पृथिव्या च स्वरांतं स्यात् उक्तेषु च पदेषु च ११
च विश्वा वो ब्रह्मविश्चाहरीविश्वाजजानच

ते शफानान्तु कं चेति चैतेषु च परेषु च १२
हवोताभ्यामिमाशब्दः स्वरांतं स्यादपि ध्रुवं
विस्फोतेऽपि न आवोळ्हं भिषजा च बभूवह
या देवानोमृळातश्च नो अच्चापि विमुंचतु १३
नासत्या च परेष्ठेषु स्वरांतस्ता अपिध्रुवं
ताविस्फोतान आवोळ्हं तातेताभिषजातथा
तानो आछतथाताविताना मृळात एव च
ताथादेवास्तथातानासत्या तावभूवेति च १५
साध्याशीर्दास्वरांतं स्या हविष्यपि च दंपंतौ
साध्या हविर्यदार्शीदादंपतीवाममश्नुतः १६
धिष्ट्या शब्दः श्वरां तः स्याद्वरिवो युवमित्यपि
धिष्णुया शब्दो विसर्गांतो यकारे च परे स्थिते
विसर्गो लुप्यते यत्र रेफे च परतस्थिते
तस्मात्पूर्वश्च ह्रस्वश्च दीर्घमापद्यते ध्रुवं १८
रुरूरौद्रो रयीरायो नीरपाङ्सिमृक्ष्यतं १८
यरलवा हकारेश्च वर्गाणामुत्तरस्त्रयः
ष्टिसज्ञिका एते रेफवर्णाविंशतिरेव च १९
विसर्गोभयरूपश्च रेफमाप्नोष्टौ परे
अग्निरेफाक्षरेणाग्नेस्तनूरसि निदर्शनं २०
अग्निर्मासविनिर्वाममंतरेग्ने च दर्शनं

कष्ठ्यपूर्वो विसर्गश्च यमाप्नोति स्वरे परे
य कारस्य तु लोपः स्याद्यकारो रिफितस्वनः २१
या ॐ षधीरिंद्र एकं तान आवोकमित्यपि
कव्यपूर्वोविसर्गश्च लुप्यते द्यौ परे तदा
रिफितस्यविसर्गस्य लोपोनस्यात्तु द्यौ परे २४
देवायज्ञमयक्ष्मामाकार्मीते च पुनर्मनः
पदांतीयस्तवर्गश्च च वर्गे च परे स्थिते
यथासंख्येन चाप्नोति चवर्गमपि निश्चितं २५
तच्चक्षुराराच्चिद्द्वेषसर्वज्जगदेव च
आ छ्छछंदश्च यच्चैव यज्जाग्रतो निदर्शनं २५
पदांतीयस्तवर्गश्च शकारे च परे स्थिते
आपद्यत्ते च वर्गं च शस्य छत्वं विधीयते २६
स्पर्शास्पूर्वः शकारश्च छत्वं न्नपद्यत्ते ध्रुवं
यथा स्वधावाञ्छुक्रश्च तच्चक्षुरुछिवषस्तथा २७
उछ्रापया दधाछ्रध्यां तच्छकेय निदर्शनं २७
उदः परस्य स्तभ्नातेः सस्य लोपस्त जायते २८
अपंचमस्य पर्शस्य द्यौ संज्ञे च स्वरे परे
तस्य तृतीय वर्गः स्यादुदेनमुत्तरान्नय
यद्ग्रामे च यद्वर्मसिमुशदूमिरेव च २९
अपंचमस्य पर्शस्य स्यात्स्ववर्गीय पञ्चमः

परे स्पर्शे पंचमे च वाङ्मात्त्यबण्महीँस्तथा ३०
तन्मित्रस्य च यन्मे च तन्मे चेति निदर्शनं ३०
तृतीय भावमापन्नात्स्पर्शाच्चापंचमादपि
हकारस्य तु पूर्वस्य स्पर्शस्य स्याच्चतुर्थकः ३१
उद्धर्षय तथा चैवमवाढ्ढव्यानि वाग्घुतः

इति हल्संधिः

स्वरसंधिप्रकरणम्

अकारोपधसर्गश्च सर्वो विसर्गैव चोकारेऽद्यौ परे स्थिते
ओत्वमापद्यते नित्यं स्वरे चैव परे स्थिनित्यं रिफितस्य न जायते
देवो वो ग्रे गुवो अग्रे देवो अग्नि निदर्शनं १
एषशब्दो हकारे च सविसर्गैव चोपधा
ओत्त्वमापद्यते नित्यं एषो हदेव एव च २
स्वरित्य यं विसर्गोऽपि त्त्वोत्त्वमापद्यते रूहौ
गव्यहः शब्दविसर्गोऽपि रात्रि शब्दपरे स्थिते
स्वोरूहाणा अहोरात्रे अहोरात्रास्त एव च ३
युवर्गयोर्यवौ स्यातां असवर्णे स्वरे परे
त्र्यंबकश्च वीड्वंगोन्विंद्रेति च निदर्शनं ४
ए ओ ऐ औ च चत्वारो त्व य वा या व एव च
आपद्यते क्रमादेव स्वरे च परतः स्थिते ५

इळागहि ग इष्टौ च एतावा उचतावुभौ
पदां तयोस्त यवयोर्लोपः स्यात्तु स्वरे परे ६
असावित्यस्य वस्यापि लोपो नस्याश्चरे परे
योसावसौ त्त्वसावेहि लोपः स्याच्चत्त्विरौ परे ७
कंठ्यस्वरो ऋकारेव ह्रस्वमापद्यते ध्रुवं
विश्वकर्मऋषिःस्वाह ऋषभं च निदर्शनं ८
अकारश्च इकारश्च उकारश्च स्वरे परे
स वर्णे दीर्घमुभयो स्थाने त्वापद्यते ध्रुवं ९
त्वाशाभ्यश्च विहीमिद्ध्रो नूज्जेपंतु निदर्शनं १०
कंठ्या स्वर इवर्णे चाप्युभयोस्थान एव च
ए कारो जायते तत्र वरुणे हेति दर्शनं ११
कंठ्यात्पर उकारे चाप्योकारमुग्रियोरपि
इहोंर्ज्जमोतवीरांश्च स्वाहोर्विति निदर्शनं १२
अवर्णात्पर एकारे ओकारे चोभयोरपि
क्रमाद्भवति चैकारोप्यौ कारः प्रैतु ब्रह्मणः १३
अभ्यैति च तथेंद्रायै द्रम्मापो मोषधीरपि
इंद्रौज स्वन्तथा प्रौक्षन् पुरुषं च निदर्शनं १४
अपांह्येमन्तथाप्रन्समुद्रस्य नैव च
स मंत्रोप्रंश्च परयोरुभयोस्थान एव च
पररूषं भवेत्तत्र पूर्वस्यैव तु बाधकं १५

अवर्णांताहृयदादे जहृयो रक्तपरयोरपि
उभयोः पररूपं स्यात् नित्यं प्रथमशाखिनां १६
उवर्णात्तु परे ऊत्यां उभयोस्थान एव च
ओत्त्वं तु जायते नित्यं षष्ठौ हीति निदर्शनं १७
अपृक्तासु ऋकारे च उभयोरारपि ध्रुवं
आत्त्यैं तथा जरायां तु आश्र्या नृश्या निदर्शनं १८
एदोद्भ्यां च परोऽकारपूर्वरूपं यजुष्वपि
ऋक्षुप्रकृति भावश्च आरे अस्मे च शृण्यते
ते अस्मत्तु त्रयो अस्पृहस्ता सो अस्य दर्शनं १९
का ध्रुवा सदनोती च होतारा पृथिवी च स्वधा
प्रतिमा ज्या इति त्वेते प्रकृत्या स्फरपि ध्रुवं २०
ईंचा सदन्न कर्माण्यार्मोध्वं चोत तथैव च
अवस्तादस्ति चेयं चेत्येतेष्वपि परेषु च २०
उकारांतं द्विवचनं ईकारांतं तथैव च
एकारांतं द्विवचनं प्रगृहयं स्यादपि ध्रुवं २२
ओकारश्च पदांते च वर्त्तमानोस्तिचेद्यदा
तदा प्रगृहय संज्ञस्यात्सेपिचेदनवञ्जहः २३
एकवर्णं पदं चैवा पृक्तसंज्ञं भवे ध्रुवं १
उकारोपृक्तसंज्ञश्च त्वे अस्मे च चमू अमी
एषां प्रगहय संज्ञा स्यान्मे उदात्तं तथैव च २४

प्रगृह्यं च पदं यच्च प्रकृत्या स्यात्स्वरे परे
इंद्राग्नी आगतं स्वर्थे अन्यान्यामो अहंतव २५
रोदसी च इमे शब्दे प्रकृत्यानैव जायते १
अस्पर्शा चपरोपृक्तः प्रकृत्यो कार एव च २६
एतौ परे प्लुतश्चैव प्रकृत्या जायते सदा
ओकारश्च पदांतीयः प्रकृत्या स्यादितौ परे २७
विश्यर्त्त इव शब्दे च प्रकृत्या वेष्टने सदा
इति स्वरसंधिप्रकरणम्

अथावग्रहप्रकरणम्

स्वरात्परश्च संयोगस्तस्यादेस्तु द्विरुच्यते
रेफात्परं हकाराच्च व्यंजनं तु द्विरुच्यते १
तज्जुषस्वयविष्ठयेति तथाशोचायविष्ठय च
भुज्जुर्दुश्च्यवनो ज्या च मर्त्येष्ठायेन संयुत्ताः २
उपस्थितं सेतिकारं केवलं तु पदं स्थितं
तत्स्थितोपस्थितन्नाना मत्रयोभे आहसंहिते ३
इति शब्दायच्चचचाभवेत्पदं
इतेः परस्य पूर्वस्य विकारादिर्न जायते ४
प्रगृह्यं चापि चर्चायामिनाव्ययधीयते
द्वे इति द्वे च शीर्षे च ऊरू बाहू अमी इति
त्वे इति त्वे चमू अस्मे इत्यस्मे च निदर्शनं ५

पुनः स्वरंतः सवितश्चेति नाव्यवधीयते
संहितायामिमे शब्दा दृश्यंते रेफवर्जिताः ६
द्वन्द्वानि द्विवचनान्तानि तत्र न स्यादवग्रहः
पूर्वं पदं हलन्तं चेद्यदा न स्यात्तदैव सः ७
इन्द्राग्नी इन्द्रावायू च इन्द्राबृहस्पती तथा
इन्द्राग्नी इन्द्रवायू च दुधुक्षन्सीषधानि च
दुस्तरः प्रावप्येभिश्च सासकान्सुषुवे तथा ८
बृहस्पती त्रैष्टुभं च त्वहोरात्रे च वावृजे
आसीदषदं च भैषादं शमीष्टाया मदन्ति च
----

इति ग्रन्थ समाप्ता